# श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

श्रीगणेशाय नमः ।
ॐ अस्य श्रीकृष्णाष्टोत्तरशतनामस्तोत्रस्य श्रीशेष ऋषिः,
अनुष्टुप्-छन्दः, श्रीकृष्णो देवता, श्रीकृष्णप्रीत्यर्थे
श्रीकृष्णाष्टोत्तरशतनामजपे विनियोगः ।
श्रीशेष उवाच ।
ॐ श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १॥

श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाम्बुजायुधः ॥ २॥

देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ३॥

पूतनाजीवितहरः शकटासुरभञ्जनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ ४॥

नवनीतनवाहारी मुचुकुन्दप्रसादकः ।
षोडशस्त्रीसहस्रेशस्त्रिभङ्गो मधुराकृतिः ॥ ५॥

शुकवागमृताब्धीन्दुर्गोविन्दो गोविदाम्पतिः ।
वत्सपालनसञ्चारी धेनुकासुरभञ्जनः ॥ ६॥

तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ।
उत्तालतालभेत्ता च तमालश्यामलाकृतिः ॥ ७॥

गोपगोपीश्वरो योगी सूर्यकोटिसमप्रभः ।
इलापतिः परंज्योतिर्यादवेन्द्रो यदूद्वहः ॥ ८॥

वनमाली पीतवासाः पारिजातापहारकः ।
गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः ॥ ९॥

अजो निरञ्जनः कामजनकः कञ्जलोचनः ।
मधुहा मथुरानाथो द्वारकानायको बली ॥ १०॥

वृन्दावनान्तसञ्चारी तुलसीदामभूषणः ।

स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ॥ ११॥

कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः ।
मुष्टिकासुरचाणूरमहायुद्धविशारदः ॥ १२॥

संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ।
अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः ॥ १३॥

शिशुपालशिरच्छेत्ता दुर्योधनकुलान्तकृत् ।
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ १४॥

सत्यवाक् सत्यसङ्कल्पः सत्यभामारतो जयी ।
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ॥ १५॥

जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः । वेणुनादविशारदः
वृषभासुरविध्वंसी बकारिर्बाणबाहुकृत् ॥ १६॥ var बाणासुरबलान्तकृत् ॥

युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ।
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥ १७॥

कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ।
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ॥ १८॥

नारायणः परम्ब्रह्म पन्नगाशनवाहनः ।
जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ १९॥

पुण्यश्लोकस्तीर्थकरो वेदवेद्यो दयानिधिः ।
सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ॥ २०॥

इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ।
कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ॥ २१॥

स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया पुरा ।
कृष्णनामामृतं नाम परमानन्ददायकम् ॥ २२॥

अनुपद्रवदुःखघ्नं परमायुष्यवर्धनम्
दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ॥ २३॥

पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत् ।
पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥ २४॥

धनावहं दरिद्राणां जयेच्छूनां जयावहम् ।
शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् ॥ २५॥

वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदम् ।
समस्तकामदं सद्यः कोटिजन्माघनाशनम् ॥ २६॥

अन्ते कृष्णस्मरणदं भवतापभयापहम् ।
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥ २७॥

इमं मन्त्रं महादेवि जपन्नेव दिवानिशम् ।
सर्वग्रहानुग्रहभाक् सर्वप्रियतमो भवेत् ॥ २८॥

पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् ।
निर्विश्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ॥ २९॥

॥ इति श्रीनारदपञ्चरात्रे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥